# ॥ मणिरत्नमाला ॥

अपार संसार समुद्र मध्ये
निमज्जतो मे शरणं किमस्ति ।
गुरो कृपालो कृपया वदैत-
द्विश्वेश पादाम्बुज दीर्घ नौका ॥ १॥

बद्धो हि को यो विषयानुरागी
को वा विमुक्तो विषये विरक्तः ।
को वाऽस्ति घोरो नरकः स्वदेह-
स्तृष्णाक्षयः स्वर्ग पदं किमस्ति ॥ २॥

संसार हृत्कस्तु निजात्म बोधः
को मोक्ष हेतुः प्रथितः स एव ।
द्वारं किमेकं नरकस्य नारी
का स्वर्गदा प्राणभृतामहिंसा ॥ ३॥

शेते सुखं कस्तु समाधिनिष्ठो
जागर्ति को वा सदसद्विवेकी ।
के शत्रवः सन्ति निजेन्द्रियाणि
तान्येव मित्राणि जितानि कानि ॥ ४॥

को वा दरिद्रो हि विशाल तृष्णः
श्रीमांश्च को यस्य समस्ति तोषः ।
जीवन्मृतो कस्तु निरुद्यमो यः
कोवाऽमृतः स्यात्सुखदा निराशा ॥ ५॥

पाशो हि को यो ममताभिधानः
संमोहयत्येव सुरेव का स्त्री ।
को वा महान्धो मदनातुरो यो
मृत्युश्च को वापयशः स्वकीयम् ॥ ६॥

को वा गुरुर्यो हि हितोपदेष्टा
शिष्यस्तु को यो गुरु भक्त एव ।
को दीर्घ रोगो भव एव साधो
किमौषधिं तस्य विचार एव ॥ ७॥

किं भूषणाद्भूषणमस्ति शीलं

तीर्थं परं किं स्वमनो विशुद्धम् ।
किमत्र हेयं कनकं च कान्ता
श्राव्यं सदा किं गुरुवेदवाक्यम् ॥ ८॥

के हेतवो ब्रह्म गतेस्तु सन्ति
सत्सङ्गतिर्दान विचार तोषाः ।
के सन्ति सन्तोऽखिल वीतरागा
अपास्त मोहाः शिव तत्त्व निष्ठाः ॥ ९॥

को वा ज्वरः प्राणभृतां हि चिन्ता
मूर्खोऽस्ति को यस्तु विवेकहीनः ।
कार्या मया का शिव विष्णु भक्तिः
किं जीवनं दोष विवर्जितं यत् ॥ १०॥

विद्या हि का ब्रह्म गति प्रदा या
बोधो हि को यस्तु विमुक्ति हेतुः ।
को लाभ आत्मावगमो हि यो वै
जितं जगत् केन मनो हि येन ॥ ११॥

शूरान्महा शूरतमोऽस्ति को वा
मनोज बाणैर्व्यथितो न यस्तु ।
प्राज्ञोतिधीरश्च समोऽस्ति को वा
प्राप्तो न मोहं ललना कटाक्षैः ॥ १२॥

विषाद्विषं किं विषयाः समस्ता
दुःखी सदा को विषयानुरागी ।
धन्योऽस्ति को यस्तु परोपकारी
कः पूजनीयो ननु तत्त्वनिष्ठः ॥ १३॥

सर्वास्ववस्थास्वपि किं न कार्यं
किंवा विधेयं विदुषां प्रयत्नात् ।
स्नेहश्च पापं पठनं च धर्मः
संसारमूलं हि किमस्ति चिन्ता ॥ १४॥

विज्ञान्महाविज्ञतमोऽस्ति को वा
नार्या पिशाच्या न च वञ्चितो यः ।
का शृङ्खला प्राणभृतां च नारी
दिव्यं व्रतं किं च निरस्त दैन्यम् ॥ १५॥

ज्ञातुं न शक्यं हि किमस्ति सर्वै-
र्योषिन्मनो यच्चरितं तदीयम् ।
का दुस्त्यजा सर्वजनैर्दुराशा
विद्याविहीनः पशुरस्ति को वा ॥ १६॥

वासो न सङ्गः सह कैर्विधेयो
मूर्खैश्च नीचैश्च खलैश्च पापैः ।
मुमुक्षुणा किं त्वरितं विधेयं
सत्सङ्गतिर्निर्ममतेश भक्तिः ॥ १७॥

लघुत्व मूलं च किमर्थितैव
गुरुत्व बीजं पदयाचनं किम् ।
जातोऽस्ति को यस्य पुनर्न जन्म
को वा मृतो यस्य पुनर्न मृत्युः ॥ १८॥

मूकोऽस्ति को वा बधिरश्च को वा
वक्तुं न युक्तं समये समर्थः ।
तथ्यं सुपथ्यं न शृणोति वाक्यं
विश्वासपात्रं न किमस्ति नारी ॥ १९॥

तत्त्वं किमेकं शिवमद्वितीयं
किमुत्तमं सच्चरितं यदस्ति ।
किं कर्म कृत्वा न च शोचनीयः ।
कामारि कंसारि समर्चनाख्यम् ॥ २०॥

शत्रोर्महाशत्रु तमोऽस्ति को वा
कामःसकोपानृत लोभतृष्णः ।
न पूर्यते को विषयैः स एव
किं दुःखमूलं ममताभिधानम् ॥ २१॥

किं मण्डनं साक्षरता मुखस्य
सत्यं च किं भूतहितं तदेव ।
त्यक्त्वा सुखं किं स्त्रियमेव सम्यक्
देयं परं किं त्वभयं सदैव ॥ २२॥

कस्यास्ति नाशे मनसो हि मोक्षः
क्व सर्वथा नास्ति भयं विमुक्तौ ।

शल्यं परं किं निज मूर्खतैव
के के ह्युपोस्या गुरुवश्च वृद्धाः ॥ २३॥

उपस्थिते प्राण हरे कृतान्ते
किमाशु कार्यं सुधिया प्रयत्नात् ।
वाक्कायचित्तैः सुखदं यमघ्नं
मुरारि पादाम्बुजमेव चिन्त्यम् ॥ २४॥

के दस्यवः सन्ति कुवासनाख्याः
कः शोभते यः सदसि प्रविद्यः ।
मातेव का या सुखदा सुविद्या
किमेधते दान वशात्सुविद्या ॥ २५॥

कुतो हि भीतिः सततं विधेया
लोकापवादाद्भव काननाच्च ।
को वास्ति बन्धुः पितरौ च कौ वा
विपत्सहायः परिपालकौ यौ ॥ २६॥

बुद्ध्या न बोध्यं परिशिष्यते किं
शिव प्रशान्तं सुख बोध रूपम् ।
ज्ञाते तु कस्मिन् विदितं जगत्स्या-
त्सर्वात्मके ब्रह्मणि पूर्ण रूपे ॥ २७॥

किं दुर्लभं सद्गुरुरस्ति लोके
सत्सङ्गतिर्ब्रह्म विचारणा च ।
त्यागो हि सर्वस्य निजात्म बोधः
किं दुर्जयं सर्व जनैर्मनोजः ॥ २८॥

पशोः पशुः को न करोति धर्म
प्राधीत शास्त्रोऽपि न चात्मबोधः ।
किं तद्विषं भाति सुधोपमं स्त्री
के शत्रवो मित्रवदात्मजाद्याः ॥ २९॥

विद्युच्चलं किं धन यौवनायु-
र्दानं परं किं च सुपात्र दत्तम् ।
कण्ठे गतेरप्यसुभिर्न कार्यं
किंवा विधेयं मलिनं शिवार्चा ॥ ३०॥

किं कर्म यत्प्रीतिकरं मुरारेः
क्वास्था न कार्या सततं भवाब्धौ ।
अहर्निशं किं परिचिन्तनीयं
संसार मिथ्यात्व शिवात्म तत्त्वम् ॥ ३१॥

कण्ठं गता वा श्रवणं गता वा
प्रश्नोत्तराख्या मणिरत्नमाला ।
तनोतु मोदं विदुषां प्रयत्नात्
रमेश गौरीश पदौ सुसेव्यौ ॥ ३२॥